स्त्रीके लक्षणोंवाली सामुद्रिककी टीका बढ़जानेके भयसे यहां दिशामात्र ही कहा है सो भी समुद्रका ही कहा हुआ है अर्थात् किसी दूसरेका नहीं है ॥ १४९ ॥

इति श्रीमहत्तमश्रीनरसिंहात्मजदुर्लभराजविरचिते सामुद्रतिलकाख्येऽपरनाम्नि पुरुषस्त्रीलक्षणे वर्णाद्यधिकारश्चतुर्थः ॥ ४ ॥

## अथ कविवृत्तान्तकथनम् ।

अत्रास्ति कोपि वंशः प्राग्वाटाख्यस्त्रिलोकविख्यातः ॥
नृपसंपदि वृद्धौ वा चालम्बनयष्टिरभवद्यः ॥ १ ॥

अन्वयः—( अत्र कः अपि त्रिलोकविख्यातः प्राग्वाटाख्यो वंशः अस्ति, यः नृपसंपदि वा वृद्धौ आलंबनयष्टिः अभवत् ) । अस्यार्थः—इन तीनों भुवनोंमें प्रसिद्ध है नाम जिसका ऐसा कोई एक प्राग्वाटाख्य वंश है-और जो वंश राजाकी संपत्ति वा समृद्धिमें सहारेकी लाठी हुआ ॥ १ ॥

आसीत्तत्र विचित्रश्रीमद्वाहिल्लसंज्ञया ज्ञातः ॥
व्ययकरणपदामात्यो नृपतेः श्रीभामदेवस्य ॥ २ ॥

अन्वयः—(तत्र विचित्रश्रीमद्वाहिल्लसंज्ञया ज्ञातः श्रीभामदेवस्य नृपतेः व्ययकरणपदामात्यः आसीत्) । अस्यार्थः—तहां चित्र विचित्र लक्ष्मी करके वाहिल्ल संज्ञासे जाना जाय जो सो श्रीभामदेव राजाका व्ययकरण नाम मंत्री होताभया ॥ २ ॥

समजनि तदंगजन्मा प्रथितः श्रीराजपाल इति नाम्ना ॥
प्रतिपक्षद्विपसिंहः श्रीनृसिंहः सुतस्तस्य ॥ ३ ॥
श्रीमान् दुर्लभराजस्तदपत्यं बुद्धिधाम सुकविरभूत् ॥
यं श्रीकुमारपालो महत्तमं क्षितिपतिं कृतवान् ॥ ४ ॥

अन्वयः—( तदंगजन्मा श्रीराजपाल इति नाम्ना प्रथितः, प्रतिपक्षद्विपसिंहः श्रीनृसिंहः तस्य सुतः समजनि, श्रीमान् बुद्धिधाम सुकविः दुर्लभराजः तदपत्यम् अभूत्, श्रीकुमारपालः महत्तमं यं क्षितिपतिं कृतवान्)। अस्यार्थः—तिसके अंगसे है जन्म जिसका सो श्रीराजपाल नाम करके प्रसिद्ध है, सो शत्रुरूप हस्तियोंको सिंहके तुल्य श्रीनृसिंह तिसका पुत्र उत्पन्न हुवा, सो

लक्ष्मीवान् और बुद्धिका घर अच्छा कवि दुर्लभराज नामसे होता भया—और श्रीकुमारपाल बड़ा है तप जिसका तिसको राजा करता भया॥ ३॥ ४॥

प्रक्षालयितुम्मलमिव वाणी मज्जति चतुर्विधाम्बुधिषु ॥
यस्य विलासवती गजतुरंगशकुनिप्रबन्धेषु ॥ ५ ॥
तेनोपज्ञातमिदं पुरुषस्त्रीलक्षणं तदनु कविता ॥
तस्यैव सुतेन जगद्देवेन समर्थयांचक्रे ॥ ६ ॥

अन्वयः—( गजतुरंगशकुनिप्रबन्धेषु चतुर्विधाम्बुधिषु मलं प्रक्षालयितुम् इव यस्य विलासवती वाणी मज्जति, तस्यैव सुतेन तेनैव जगद्देवेन इदं पुरुषस्त्रीलक्षणम् उपज्ञातं तदनु कविता उपज्ञाता इव समर्थयांचक्रे)। अस्यार्थः—हाथी, घोड़े, शकुनि इनके जो प्रबंध कहिये शास्त्रोंमें चारों दिशाके जो समुद्रकी भाँति मलके धोनेको जिसकी चमत्कारी वाणी गोता मारतीहै, तिसीके पुत्र जगद्देवने यह पुरुष स्त्रीके हैं लक्षण जिसमें आद्य ज्ञान वर्णन किया तिसके पीछे कविता वर्णन करके इसको आर्या छंदमें बनाया ॥५॥६॥

अहमपि परेपि कवयस्तथापि महदन्तरं परिज्ञेयम् ॥
ऐक्यं रलयोरिति यदि तत्किं कलभायते करभः ॥ ७ ॥
सुललितपदा सुवर्णा सालंकारा सुदुर्लभा सार्था ॥
एकाप्यर्थसुरम्या किं पुनरष्टौ शतं चैताः ॥ ८ ॥

अन्वयः—( अहम् अपि परेपि कवयः संति, तथापि—महदन्तरं परिज्ञेयम् यदि रलयोः ऐक्यम् इति तत् किं करभः कलभायते सुललितपदा सुवर्णा सालंकारा सार्था अर्थसुरम्या एकापि आर्या सुदुर्लभा अष्टौ शतम् एताः किं पुनः वक्तव्यम्)। अस्यार्थः-मैं भी कवि हूं और भी कवि हैं तौभी बड़ा अन्तर समझना चाहिये, क्योंकि जो रकार और लकारकी एकता है तो क्या करभ (ऊंट) कलभ (हाथी) होजायगा? सुन्दर हैं पद जिसमें और सुन्दर ही हैं अक्षर जिसमें और अलङ्कार सहित हैं अर्थ जिसमें ऐसी अर्थ करके सुन्दर आर्या एकभी बनाना कठिन है और जो वे आठसौ ऐसी अर्थसहित होय तौ फिर क्या कहना है ॥ ७ ॥ ८ ॥

परहृदयाभिप्रायं परगदितार्थस्य वेत्ति यः सत्त्वम् ॥
सत्त्वं भुवने दुर्लभसम्भूतिः सुकविरेवैकः ॥ ९ ॥
नृस्त्रीलक्षणपुष्पां स्रजमेतां सुरभिवर्णगुणगुम्फाम् ॥
मृगराजसभाख्याता अपि सन्तः कुरुत कण्ठस्थाम् ॥ १० ॥

अन्वयः-(यः परगदितार्थस्य हृदयाभिप्रायं वेत्ति,स सत्त्वम् तथा भुवने सत्त्वं दुर्लभम् एकः सुकविः एव सम्भूतिः. हे मृगराजसभाविख्याताः सन्तः अपि पुरुषा एतां नृस्त्रीलक्षणपुष्पां सुरभिवर्णगुणगुम्फां स्रजं कण्ठस्थां कुरुत । अस्यार्थः-( जो दूसरेके कहे हुए प्रयोजनको जानिलेय सोई सत्त्व है-और लोकमें सत्त्व ही दुर्लभ है-और एक सुन्दर कवि है यही सम्भूति है हे सिंहसभाके विख्यात पंडितो ! इस पुरुष स्त्रीके लक्षणरूप हैं पुष्प जिसमें और सुगन्धित रंगवाले इन गुणों करके गुँथी हुई मालाको कण्ठमें स्थित करो ॥ ९ ॥ १० ॥ समस्तग्रन्थश्लोकसंख्या ॥ ७९३ ॥

इति श्रीमहत्तमश्रीनृसिंहात्मजदुर्लभराजविरचिते सामुद्रतिलकाख्येऽपर नाम्नि पुंस्त्रीलक्षणे वंशवर्णनं ग्रन्थपूर्तिश्च ॥

सामुद्रिकभाषेयं राधाकृष्णेन निर्मिता रम्या ॥
लब्ध्वा साहाय्यं वै विदुषो घनश्यामनाम्नश्च ॥ १ ॥
गिरिवेदनवक्ष्माभिः प्रमिते संवत्सरे सुपौषे च ॥
मेचकपक्षे रुचिरे दुर्गातिथियुतरवेर्वारे ॥ २ ॥
अर्गलपुरवरनगरे कालिन्दीतीरसंस्थिते रम्ये ॥
नृस्त्रीलक्षणशास्त्रं पूर्णं जातं हि लोकेऽस्मिन् ॥ ३ ॥
जातो वैश्यः खेमराजाऽभिधानः श्रीकृष्णस्यापत्यभावं गतो वै ।
तेनायं वै वेङ्कटेशाख्ययन्त्रे श्रीमुम्बय्यां मुद्रितो ग्रन्थ आशु ॥ ४ ॥

॥ समाप्तोऽयं ग्रन्थः ॥

---

मिलनेका पत्ता-खेमराज श्रीकृष्णदास,
"श्रीवेङ्कटेश्वर" स्टीम् प्रेस-बंबई.